# उत्कोचः- काचित् टिप्पणी।

**एस्.जगन्नाथः मैसूरु**

संस्कृतवाङ्मये अवैधं स्वीकृतस्य धनस्य प्रतिपादिकानि त्रीणि पदानि दृश्यन्ते। उपदा, उत्कोचः, लञ्च इति च। तत्र उपदा आकारान्तः स्त्रीलिङ्गः। यद्यपि भूयस्सु प्रयोगेषु उत्कोचशब्दो पुंल्लिङ्गे दृश्यते तथाऽपि एकत्र आकारन्तस्त्रीलिङ्गत्वेनापि प्रयोगोऽस्याक्षिलक्ष्यीकृतः।

## 1.उत्कोचस्य उपदाशब्देन व्यवहारः

पाणिनिस्तु उत्कोचम् *उपदा* पदेन व्यवहरति स्म। दृश्यतां पाणिनिना परामृष्टाम् उपदाम्:-*तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते* **अष्टाध्यायी** 5.1.47 सुदर्शनदेवाचार्यप्रणीतायां पाणिनीयाष्टाध्यायीप्रवचनाख्यायां संस्कृतव्याख्यायाम्-उत्कोचः=उपदा- इति, तत्रैव हिन्दीभाषायाम् उत्कोच्-घूस्, रिश्वत् को उपदा कहते हैं-इति चोक्तम्।

V.S.Agrawala विरचिते *India as known to Pāṇini* इति ग्रन्थे (Page 413)

Bribery s referred to(V.1.47)( in *Aṣṭādyāyī*); e.g. work for which a sum of rupees five was paid as bribe(*upadā*)was called *pañcaka*. The *Kāśikā* mentions the amounts of such bribes running up to a hundred or a thousand rupees.

S.M.Katre विरचिते *A dictionary of Pāṇini* इति ग्रन्थे उपदाशब्दस्य A bribe, present, offering इति त्रयोऽर्था उक्ताः।

वाचस्पत्ये च-उत्कोचे उपढौकने च-इति द्वावर्थौ दर्शितौ शब्दस्यास्य। उपढौकनं च-राजादेः संतोषार्थं द्रव्यादिप्रापणम्।

अधुना उत्कोचलक्षणं द्रष्टव्यम्।

## 2.कात्यायनस्मृतिः

कात्यायनस्मृतिः कुत्रापि नोपलभ्यते। परन्तु कात्यायनस्मृतिगतान् श्लोकान् तत्र तत्र व्याख्याननिबन्धादिषु उद्धृतान् पि.वि.काणे "कात्यायनस्मृतिसारोद्धार"नाम्न्यां कृतौ उद्धृतवान्। तत्र "दत्ताप्रदानिक"मिति विभागे समुद्धृतेषु श्लेकेषु उत्कोचलक्षणं दृश्यते।

कात्यायनः उत्कोचलक्षणम् एवमाह-

*स्तेनसाहसिकोद्वृत्तपारजायिकशंसनात्।*
*दर्शनाद् वृत्तनष्टस्य तथा सत्यप्रवर्तनात्।* **कात्यायनस्मृतिसारोद्धारः**(650)
*प्राप्तमेतैस्तु यत् किञ्चित् तदुत्कोचाख्यमुच्यते।*
*न दाता यत्र दण्ड्यः स्यान्मध्यस्थश्चैव दोषभाक्।* **कात्यायनस्मृतिसारोद्धारः**(651)

सुस्पष्टमेवात्र उत्कोचस्य दातुरनपराद्धत्वम्। परन्तु आधुनिको विधिरुत्कोचस्य दातारमप्यपराद्धमेव घोषयति। पूर्वस्मिन् काले कथञ्चित् स्वकार्यसिद्ध्यर्थमुत्कोचो दातव्य एवेति वज्राग्रहो सामाजिकानां हृदये नासीदित्यनेन कात्यायनश्लोकेन प्रतीयते। तेषां मुग्धत्वात् ,उत्कोचदानप्रसंगस्यानिवार्यतया तैः स्वीकर्तव्यत्वापाताच्च

ते सर्वथाऽप्यनपराद्धत्वेन निर्णीता अधिकरणषु।यन्मध्यस्थं दोषभाजमाह कात्यायनः तत् सुष्ठु, उत्कोचप्रदानाय सूचनादानस्यापराधत्वे लौकिकव्यवहारस्यानुकूलत्वात्।

*या तु कार्यस्य सिद्ध्यर्थम् उत्कोचा स्यात् प्रतिश्रुता।*

*तस्मिन्नपि प्रसिद्धेऽर्थे न देया स्यात् कथञ्चन* ।**कात्यायनस्मृतिसारोद्धारः(648)**[**अत्र उत्कोचेति स्त्रीलिङ्गशब्दोऽवधानमर्हति।**]

*अथ प्रागेव दत्ता स्यात् प्रतिदाप्यस्तथा बलात्।*

*दण्डं चैकादशगुणमाहुर्गार्गीयमानवाः* ।**कात्यायनस्मृतिसारोद्धारः(649)**

*नियुक्तो यस्तु कार्येषु स चेदुत्कोचमाप्नुयात्।*

*स दाप्यस्तद् धनं कृत्स्नं दमश्चाकादशाधिकम्* ।**कात्यायनस्मृतिसारोद्धारः(652)**

*अनियुक्तस्तु कार्यार्थमुत्कोचं यमवाप्नुयात्।*

*कृतप्रत्युपकारार्थस्तस्य दोषो न विद्यते।* **कात्यायनस्मृतिसारोद्धारः( 653)**

## 3.याज्ञवल्क्यस्मृतिः-

याज्ञवल्क्यस्मृतौ उत्कोचविषये कोऽपि विशेषो न दृश्यते । तत्र तु केवलमेतदुक्तम्-
*उत्कोचजीविनो द्रव्यहीनान् कृत्वा विवासयेत्* ।1.339

## 4.मनुस्मृतिः

मनुस्मृतिं व्याख्यन् कुल्लूकः, *उत्कोचकाश्चोपधिका वञ्चकाः कितवास्तथा।* **मनुस्मृतिः(9.260)** इत्यत्र उत्कोचकान् एवं लक्षयति-

*उत्कोचका ये कार्यिभ्यो धनं गृहीत्वा कार्यमयुक्तं कुर्वन्ति।*

अर्थात्, कुल्लूकस्याभिप्रायानुसारेण अयुक्ताय कार्याय स्वीक्रियमाणं धनम् उत्कोचपदाभिलप्यमिति सिद्ध्यति।अन्ये केचन परामर्शाः स्मृतिगता एवं वर्तन्ते-

*तान् विदित्वा सुचरितैर्गूढैस्तत्कर्मकारिभिः।*

*चारैश्चानेकसंस्थानैः प्रोत्साद्य वशमानयेत्।(9.261)*

*तेषां दोषानभिव्याप्य स्वे स्वे कर्मणि तत्त्वतः।*

*कुर्वीत शासनं राजा सम्यक्सारापराधतः।(9.262)*

परन्तु उत्कोचलक्षणस्यात्रानुल्लिखितत्वदर्शनात् काचिदतृप्तिर्जायत एव।

## 4.अष्टाध्यायी

अस्तु नाम, भारते कदा उत्कोचस्य प्रारम्भोऽभूदित्यत्र समीचीनं प्रमाणं नोपलभ्यते। परन्तु इदं तु निश्चप्रचं यत् पाणिनेरपि काले (क्रि.पू.4र्थशतकम् )उत्कोचेन प्रजानां पीडनं जायते स्मेति।*तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते* **अष्टाध्यायी** 5.1.47

सूत्रस्यास्य व्याख्यायां पञ्चकः, सप्तकः, शत्यः, शतिकः, साहस्रः- एतानि पदानि उदाह्रियन्ते व्याख्यातृभिः। अर्थात् यस्मिन् वृद्धिर्वा आयो वा लाभो वा शुल्को वा उपदा वा दीयते सः

वृद्ध्यायलाभशुल्कोपदापरिमाणेनैव निर्देशनमर्हति स्म यथा पञ्चकः, सप्तकः, इत्यादि।(यस्मिन् पञ्चरूप्यकाणि दीयन्ते स्म स पञ्चकः, यस्मिन् सप्तरूप्यकाणि दीयन्ते स्म स सप्तकः इत्यादि!)अत्र साहस्र इत्यपि पदम् विशेषतोऽवधातव्यम्। पाणिनेरपि काले सहस्रं रूप्यकाणां उपदात्वेन बलादाहर्तार आसन्नित्यनेन इदं सम्यगेवाभ्यूहितुं शक्यते यद् विना कामपि दयां जनपीडका उपदाम् आहरन्ति स्मेति।

न केवलमेतावदेव, द्वितीयवारं तृतीयवारं पञ्चमवारं सप्तमवारमपि उत्कोचाहर्तार आसन्निति *पूरणार्थाट्ठन्* **अष्टाध्यायी** 5.1.48 इति सूत्रयता पाणिनिना सुस्पष्टं सूचितम्।अस्य सूत्रस्य व्याख्यातारः सूत्रार्थमेवं विवृण्वन्ति- *द्वितीयो वृद्ध्यादिरस्मिन् दीयते द्वितीयिकः, तृतीयिकः, पञ्चमिकः, सप्तमिकः।* वृद्धट्यादिरित्यत्र आदिशब्देन उत्कोचार्थकस्योपदाशब्दस्य ग्रहणं करणीयमिति स्फुटतरम्।प्रथमवारमाहृतेन उत्कोचेनापरितुष्यतां जनतापीडकानां विषये जनानां धोरणी कीदृशी आसीदिति तेषु जनतया दत्ताभिरेताभिः संज्ञाभिरेव सम्यगवगन्तुं शक्यते।परन्तु तेषां को दण्डो विहित आसीदिति तु पाणिनिरेव वेत्ति।

न केवलम् उपदाऽऽहर्तारः सोत्प्रासं कटाक्षिता पाणिनिकालिक्या जनतया किन्तु उपदामपि सोत्प्रासं ते कटाक्षयामुसुरेव ।तत्र प्रमाणम् अष्टाध्यायीगतमिदं सूत्रमेव- *भागाद् यच्च* (**अष्टाध्यायी** 5.1.49) एतेन ज्ञायते यद् भाग्यं, भागिकं , शतं, भाग्या, भागिका- इत्येते शब्दाः उपदापरिमाणस्य तथा केवलम् उपदा इत्यस्यापि सूचका इति।

## 5.कौटिल्यार्थशास्त्रम्

अधुना अर्थशास्त्रे उत्कोचविषये किम् उक्तमिति परिशीलनीयम्।

अर्थशास्त्रे षष्ठे प्रकरणे उपधाभिः शौचाशौचज्ञानम् अमात्यानाम् इत्यभिधानं धृतवत्यध्याये उत्कोचस्य परोक्षः परामर्शो विद्यते।यथा-

*सेनापतिरसत्प्रग्रहेणावक्षिप्तस्सत्रिभिरेकैकममात्यमुपजापयेल्लोभनीयेनार्थेन राजविनाशाय- सर्वेषामेतद् रोचते कथं वा तवेति।प्रत्याख्याने शुचिरित्यर्थोपधा।*अत्र **लोभनीयेनार्थेने**ति शब्द उत्कोचं बोधयतीत्यत्र न संशयलेशः।

उत्कोचस्य प्रस्तावः पुनः 79तमे प्रकरणे समायाति।स चैवं वर्तते-

*धर्मस्थं वा प्रदेष्टारं (=कण्टकशोधनादिकर्माधिकारिणः)वा विश्वासोपगतं सत्री ब्रूयात्' असौ मे बन्धुरभियुक्तः।तस्यायमनर्थः प्रतिक्रियताम्, अयं चार्थः प्रतिगृह्यताम् । स चेत् तथा कुर्यात् 'उपदाग्राहक{ इति प्रवास्येत।*

*ग्रामकूटमध्यक्षं वा सत्री ब्रूयात् असौ जाल्मः प्रभूतद्रव्यः तस्यायमनर्थः तेनैनमाहारयस्व इति। त चेत्तथा कुर्यात् उत्कोचकः इति प्रवास्येत।*(अत्र सत्रिशब्देन शकुनशास्त्रज्ञत्वादिप्रसिद्ध्या गूढवेषेण संचरमाण इत्यर्थं टिप्पणी ददाति।)

परन्तु अत्र उपदोत्कोचयोः पार्थक्येनैवोल्लेखात् तन्मध्ये कश्चन भेदो वर्तत इति स्पष्टम्। परन्तु कौटिल्यार्थ-शास्त्रकन्नडानुवादे श्रीसच्चिदानन्दशङ्करानन्दभारतीस्वामिविरचिते तु उभयोरपि पदयोः लञ्च इत्येव भाषान्तरणं कृतं दृश्यते।

एतदनन्तरम् उत्कोचस्यास्पष्ट इवोल्लेखः अर्थशास्त्रे 2.9.27 इत्यत्र दृश्यते

*यथा ह्यनास्वादयितुं न शक्यं जिह्वातलस्थं मधु वा विषं वा।*
*अर्थस्तथा ह्यर्थचरेण राज्ञः स्वल्पोऽप्यनास्वादयितुं न शक्यः।।*
*मत्स्या यथाऽन्तःसलिले चरन्तो ज्ञातुं न शक्याः सलिलं पिबन्तः।*
*युक्तास्तथा कार्यविधौ नियुक्ता ज्ञातुं न शक्या धनमाददानाः।।*

*अपि शक्या गतिर्ज्ञातुं पततां खे पतत्रिणाम्।*
*न तु प्रच्छन्नभावानां युक्तानां चरतां गतिः।।*

परन्तु अत्र किम् उत्कोचस्यैव परामर्शः कृतो वा आहोस्विद् धनस्य दुरुपयोगः परामृष्टो वेति संदिग्धम्।
ममाभिप्रायानुसारेण श्लोकत्रय्याममुष्याम् उत्कोचस्य प्रस्तावो नास्त्येव। केवलं धनस्य दुरुपयोगः वैधस्य धनस्य वा चौर्यमत्र प्रकृतम्। अत्र मत्स्योदाहरणं दत्तम्। मत्स्यः कदा जलं पिबतीति वक्तुं न शक्यते सर्वत्र जलावृतत्वान्मत्स्यस्य। तद्वदत्रापि प्रकृते सर्वत्र धनविषयिणि व्यवहारे मग्नोऽधिकृतः पुरुषः कदा धनं भक्षयन्तीति वक्तुं न शक्यत इत्येव तात्पर्यकल्पना न्याय्या। उत्कोचधनं किल बहिःस्थलादानीय दीयते न पुनरधिकारिपुरुषं परितस्तत् सदा संचरति !

## 6.महाभारतम्।

उत्कोचाय क्रोधातिरेकः प्रकटितो महाभारते। केषुचन च श्लोकेषु उत्कोचस्य कटुशब्दैर्निन्दा कृता । परन्तु केवलमेतैरेव शब्दैरुत्कोचनिवारणा न शक्यते कर्तुम्!

*रौरवे शतसाहस्रं वर्षाणामिति संस्थितिः।*
*मानुषघ्नाः कृतघ्नाश्च तथैवानृतवादिनः।*
*जारचोराश्च नारी च सर्वतश्चापकारिणी।*
*उत्कोचकाश्च पिशुना वर्णसंभेदकारकाः।*
*तादृशाः परिपच्यन्ते रौरवे नरके नराः। अनुशासनपर्व, परिशिष्टं 15. 2732-2736*
*......................................................................*
*ये पुरा मनुजा नित्यमुत्कोचनपरायणाः।*
*भीषयन्ति परान्नित्यं विकुर्वन्ति तथैव च।*
*ऋणैर्वृद्धिं च ये कृत्वा दरिद्रेभ्यो यथेष्टतः।*
*ऋणार्थमभिगच्छन्ति सततं वृद्धिरूपकाः।.....*
*एवंयुक्तसमाचाराः कालधर्मगताः पुनः।*
*पीडिता यमदण्डेन निरयस्थाश्चिरं प्रिये।*
*कथञ्चित् प्राप्य मानुष्यं तत्र ये दुःखसंयुताः।*
*कुदेशे दुःखभूयिष्ठे व्याघातशतसंकुले।*
*जायन्ते तत्र शोचन्तः सोद्वेगाश्च यतस्ततः। अनुशासनपर्व परिशिष्टम् 15. 1930-1940*
*.........................................................................................*
*उमा-*
*भगवन् मानुषे लोके मानुषेषु बहुष्वपि।*
*सहसा नष्टसर्वस्वा भ्रष्टकोशपरिग्रहाः।*
*दृश्यन्ते मानुषाः केचिद् राजचोरादिकादिभिः।*
*केन कर्मविपाकेन तन्मे शंसितुमर्हसि।*
*महेश्वरः।*
*ये पुरा मनुजा देवि आसुरं भावमाश्रिताः।*

*परेषां वृत्तिनाशं तु कुर्वते द्वेषलोभतः।*
*उत्कोचनपराश्चैव पिशुनाश्च तथाविधाः।*
*परद्रव्यहरा घोराश्चौर्याद् वाऽन्येन कर्मणा।*
*निर्दया निरनुक्रोशाः परेषां वृत्तिनाशनाः।*
*नास्तिकानृतभूयिष्ठाः परद्रव्यापहारिणः।*
*एवं युक्तसमाचाराः दण्डिता यमशासनैः।*
*निरयस्थाश्चिरं कालं यत्र दुःखसमन्विताः।*
*यदि चेन्मानुषं जन्म लभेरंस्ते तथाविधाः।*
*तत्रस्थाः प्राप्नुवन्त्येव सहसा द्रव्यनाशनम्।*
*कष्टं च प्राप्नुवन्त्येव कारणं कारणादपि।*
*नाशं विनाशं द्रव्याणामुपघातांश्च सर्वशः।अनुशासनपर्व परिशिष्टम् 15. 2083-2098*
.............................................................................................
*नग्नस्य स्नायमानस्य  या च वन्ध्यातिथेर्गतिः।*
*उत्कोचिनां (उत्क्रोधिनां )मृषोक्तीनां वञ्चकानां च  या गतिः।*
*आत्मापहारिणां या च या च मिथ्याभिशंसिनाम्।*
*भृत्यैः संदृश्यमानानां  पुत्रदाराश्रितैस्तथा।*
*असंविभज्य  क्षुद्राणां या गतिर्मृष्टमश्नताम्।*
*तां गच्छेयं गतिं घोरां न चेद् हन्यां जयद्रथम्।द्रोणपर्व  51.31-32..................*
*परिहासश्च भृत्यैस्ते  न नित्यं वदतां वर।*
*कर्तव्यो राजशार्दूल दोषमत्र हि मे शृणु।*
*अवमन्यन्ति भर्तारं संहर्षादुपजीविनः।*
*स्वे स्थाने न च तिष्ठन्ति लङ्घयन्ति  हि तद्वचः।*
*प्रेष्यमाणा विकल्पन्ते  गुह्यं चाप्यनुयुञ्जते।*
*अयाच्यं चैव याचन्तेऽभोज्यान्याहारयन्ति च।*
*क्रुध्यन्ति परिदीप्यन्ति भूमिमध्यासतेऽपि च।*
*उत्कोचैर्वञ्चनाभिश्च कार्याण्यनुविहन्ति च।शान्तिपर्व  56. 48-51*

एतेषां श्लोकानां कर्ता किं सत्यवतीसुत एवाहोस्विदन्येन केनिचत् प्रक्षिप्ता इमे श्लोका इति विचारोऽप्रकृतः। प्रकृतं त्वेतत्- æ ''सेवकेषु राजभिरतिपरिचयः कथमपि न कर्तव्यः ।तथा कृते तु तेषां गर्वो जायते,ते उत्कोचस्वीकारादिभ्रष्टाचारमारभन्ते, च्यवन्ते च पथः साधुसेवितात्'' इति श्लोकनामेतेषां कर्तुर्मनसि आतङ्कोऽस्ति।परन्त्वेतावता उत्कोचलक्षणमत्र सम्यगुट्टङ्कितमिति वक्तुं न शक्यते।

## 7.सोमदेवीयानि  नीतिसूत्राणि

कश्चन कन्नडभाषी स्वविरचिते संस्कृतग्रन्थे उत्कोचविषये सुभाषितानि वयति न पुनः कोपावेशादिकं दर्शयति। स च सोमदेवः।सः अरिकेसरिणः पुत्रस्य वाग्राजस्य सभाकविरासीत्।(क्रि.श.10मं शतमानम्।)

*लञ्चो  हि सर्वपातकानामागमद्वारम्।17-39*
*मातुः स्तनमपि लुनन्ति लञ्चोपजीविनः।17-40*

*लञ्चेन कार्यकारिभिः उरभ्रवत् स्वामी विक्रीयते।17-41*
*लञ्चेन राज्ञोऽर्थलाभः प्रासादविध्वंसनेन लोहकीलकलाभ इव।17-42*
*राज्ञो लञ्चेन कार्यकरणं किं नाम कल्याणम्?17-43*
*देवताऽपि यदि चोरेषु मिलति, कुतः प्रजानां कुशलम्? 17-44*
*लञ्चेनार्थोपायं दर्शयन् देशं कोशं मित्रं तन्त्रं च भक्षयति।17-45*

## 8.निगमनम्।

यदि सत्यमुच्यते प्राचीनसंस्कृतवाङ्मये उत्कोचविषयकान् परामर्शान् दृष्ट्वा काचिदतृप्तिरिव जायते वाचकानाम्।कुत्रापि उत्कोचविषये तीक्ष्णानां दण्डादिकानाम् उल्लेखः न प्राप्यते । अपि च, उत्कोचदातारम् अपराद्धं यन्नामन्यन्त स्मृतिकारास्तेनैतद् ज्ञायते यत् उत्कोचस्य आदानं बलादिव क्रियते स्म। कात्यायनस्मृतेरनु-ुपलब्ध्या उत्कोचस्य विषये तेनोक्तस्य नासन्दिग्धो बोधः। अधुना उपलब्धेषु कात्यायनस्मृतिगतेषु श्लोकेषु यः परमाल्पः विषयपरामर्शो दृश्यत उत्कोचसंबद्धः, तेनेदमभ्यूहितुं शक्यते यत् कात्यायनस्मृतौ उत्कोचविषयका भूयांस एव परामर्शा आसन्।कुतोऽपि स्थलाद् यदि समग्रायाः कात्यायनस्मृतेरुल्लेखः प्राप्येत तदा उत्कोचविषयकाः स्मृतिकाराभिप्रायाः इतोऽपि स्पष्टां काञ्चन कल्पनाम् अध्येतृषु बाढं स्रष्टुं शक्नुवन्ति।

~~~~~~~~~~~~~~~~~~~~~~~~~~~

jagannathas1956@gmail.com
~~~~~~~~~~~~~~~~~~~~~~~~~~~